॥ श्रीविष्णोस्तोत्रं शिवप्रोक्तं नरसिंहपुराणे ॥

मार्कण्डेय उवाच
वाराहः कथितो ह्येवं प्रादुर्भावो हरेस्तव ।
साम्प्रतं नारसिंहं तु प्रवक्ष्यामि निबोध मे ॥ १॥

दितेः पुत्रो महानासीद्धिरण्यकशिपुः पुरा ।
तपस्तेपे निराहारो बहुवर्षसहस्रकम् ॥ २॥

तपतस्तस्य संतुष्टो ब्रह्मा तं प्राह दानवम् ।
वरं वरय दैत्येन्द्र यस्ते मनसि वर्तते ॥ ३॥

इत्युक्तो ब्रह्मणा दैत्यो हिरण्यकशिपुः पुरा ।
उवाच नत्वा देवेशं ब्रह्माणं विनयान्वितः ॥ ४॥

हिरण्यकशिपुरुवाच
यदि त्वं वरदानाय प्रवृत्तो भगवन्मम ।
यद्यदवृणोम्यहं ब्रह्मंस्तत्तन्मे दातुमर्हसि ॥ ५॥

न शुष्केण न चार्द्रेण न जलेन न वह्निना ।
न काष्ठेन न कीटेन पाषाणेन न वायुना ॥ ६॥

नायुधेन न शूलेन न शैलेन न मानुषैः ।
न सुरैरसुरैर्वापि न गन्धर्वैर्न राक्षसैः ॥ ७॥

न किंनरैर्न यक्षैस्तु विद्याधरभुजंगमैः ।
न वानरैर्मृगैर्वापि नैव मातृगणैरपि ॥ ८॥

नाभ्यन्तरे न बाह्ये तु नान्यैर्मरणहेतुभिः ।
न दिने न च नक्तं मे त्वत्प्रसादाद् भवेन्मृतिः ॥ ९॥

इति वै देवदेवेशं वरं त्वत्तो वृणोम्यहम् ।
मार्कण्डेय उवाच
इत्युक्तो दैत्यराजेन ब्रह्मा तं प्राह पार्थिव ॥ १०॥

तपसा तव तुष्टोऽहं महता तु वरानिमान् ।
दुर्लभानापि दैत्येन्द्र ददामि परमाद्भुतान् ॥ ११॥

अन्येषां नेदृशं दत्तं न तैरित्थं तपः कृतम् ।
त्वत्प्रार्थितं मया दत्तं सर्वं ते चास्तु दैत्यप ॥ १२॥

गच्छ भुङ्क्ष्व महाबाहो तपसामूर्जितं फलम् ।
इत्येवं दैत्यराजस्य हिरण्यकशिपोः पुरा ॥ १३॥

दत्त्वा वरान् ययौ ब्रह्मा ब्रह्मलोकमनुत्तमम् ।
सोऽपि लब्धवरो दैत्यो बलवान् बलदर्पितः ॥ १४॥

देवान् सिंहान् रणे जित्वा दिवः प्राच्यावयद् भुवि ।
दिवि राज्यं स्वयं चक्रे सर्वशक्तिसमन्वितम् ॥ १५॥

देवा अपि भयात्तस्य रुद्राश्चैवर्षयो नृप ।
विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम् ॥ १६॥

प्राप्तत्रैलोक्यराज्योऽसौ हिरण्यकशिपुः प्रजाः ।
आहूय सर्वा राजेन्द्र वाक्यं चेदमभाषत ॥ १७॥

न यष्टव्यं न होतव्यं न दातव्यं सुरान् प्रति ।
युष्माभिरहमेवाद्य त्रैलोक्याधिपतिः प्रजाः ॥ १८॥

ममैव पूजां कुरुत यज्ञदानादिकर्मणा ।
ताश्च सर्वास्तथा चक्रुर्दैत्येन्द्रस्य भयान्नृप ॥ १९॥

यत्रैवं क्रियमाणेषु त्रैलोक्यं सचराचरम् ।
अधर्मयुक्तं सकलं बभूव नृपसत्तम ॥ २०॥

स्वधर्मलोपात् सर्वेषां पापे मतिरजायत ।
गते काले तु महति देवाः सेन्द्रा बृहस्पतिम् ॥ २१॥

नीतिज्ञं सर्वशास्त्रज्ञं पप्रच्छुर्विनयान्विताः ।
हिरण्यकशिपोरस्य विनाशं मुनिसत्तम ॥ २२॥

त्रैलोक्यहारिणः शीघ्रं वधोपायं वदस्व नः ।
बृहस्पतिरुवाच
शृणुध्वं मम वाक्यानि स्वपदाप्राप्तये सुराः ॥ २३॥

प्रायो हिरण्यकशिपुः क्षीणभागो महासुरः ।

शोको नाशयति प्रज्ञां शोको नाशयति श्रुतम् ॥ २४॥

शोको मतिं नाशयति नास्ति शोकसमो रिपुः ।
सोढुं शक्योऽग्निसम्बन्धः शस्त्रस्पर्शश्च दारुणः ॥ २५॥

न तु शोकभवं दुःखं संसोढुं नृप शक्यते ।
कालान्निमित्ताच्च वयं लक्ष्यामस्तत्क्षयं सुराः ॥ २६॥

बुधाश्च सर्वे सर्वत्र स्थिता वक्ष्यन्ति नित्यशः ।
अचिरादेव दुष्टोऽसौ नश्यत्येव परस्परम् ॥ २७॥

देवानां तु परामृद्धिं स्वपदप्राप्तिलक्षणाम् ।
हिरण्यकशिपोर्नाशं शकुनानि वदन्ति मे ॥ २८॥

यत एवमतो देवाः सर्वे गच्छत माचिरम् ।
क्षीरोदस्योत्तरं तीरं प्रसुप्तो यत्र केशवः ॥ २९॥

युष्माभिः संस्तुतो देवः प्रसन्नो भवति क्षणात् ।
स हि प्रसन्नो दैत्यस्य वधोपायं वदिष्यति ॥ ३०॥

इत्युक्तास्तेन देवास्ते साधु साध्वित्यथाब्रुवन् ।
प्रीत्या च परया युक्ता गन्तुं चक्रुरथोद्यमम् ॥ ३१॥

पुण्ये तिथौ शुभे लग्ने पुण्यं स्वस्ति च मङ्गलम् ।
कारयित्वा मुनिवरैः प्रस्थितास्ते दिवौकसः ॥ ३२॥

नाशाय दुष्टदैत्यस्य स्वभूत्यै च नृपोतम् ।
ते शर्वमग्नतः कृत्वा क्षीराब्धेरुत्तरं तटम् ॥ ३३॥

तत्र गत्वा सुराः सर्वे विष्णुं जिष्णुं जनार्दनम् ।
अस्तुवन् विविधैः स्तोत्रैः पूजयन्तः प्रतस्थिरे ॥ ३४॥

भवोऽपि भगवान् भक्त्या भगवन्तं जनार्दनम् ।
अस्तुवन्नामभिः पुण्यैरेकाग्रमनसा हरिम् ॥ ३५॥

श्रीमहादेव उवाच

विष्णुर्जिष्णुर्विभुर्देवो यज्ञेशो यज्ञपालकः ।
प्रभविष्णुर्ग्रसिष्णुश्च लोकात्मा लोकपालकः ॥ ३६॥

केशवः केशिहा कल्पः सर्वकारणकारणम् ।
कर्मकृद वामनाधीशो वासुदेवः पुरुष्टुतः ॥ ३७॥

आदिकर्ता वराहश्च माधवो मधुसूदनः ।
नारायणो नरो हंसो विष्णुसेनो हुताशनः ॥ ३८॥

ज्योतिष्मान् द्युतिमान् श्रीमानायुष्मान् पुरुषोत्तमः ।
वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यः सुरार्चितः ॥ ३९॥

नरसिंहो महाभीमो वज्रदंष्ट्रो नखायुधः ।
आदिदेवो जगत्कर्ता योगेशो गरुडध्वजः ॥ ४०॥

गोविन्दो गोपतिर्गोप्ता भूपतिर्भुवनेश्वरः ।
पद्मनाभो हषीकेशो विभुर्दामोदरो हरिः ॥ ४१॥

त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः ।
वामनो दुष्टदमनो गोविन्दो गोपवल्लभः ॥ ४२॥

भक्तिप्रियोऽच्युतः सत्यः सत्यकीर्तिर्ध्रुवः शुचिः ।
कारुण्यः करुणो व्यासः पापहा शान्तिवर्धनः ॥ ४३॥

संन्यासी शास्त्रतत्त्वज्ञो मन्दारगिरिकेतनः ।
बदरीनिलयः शान्ततततपस्वी वैद्युतप्रभः ॥ ४४॥ var शान्ततत्त्वज्ञो
भूतावासो गुहावासः श्रीनिवासः श्रियः पतिः ।
तपोवासो दमो वासः सत्यवासः सनातनः ॥ ४५॥

पुरुषः पुष्कलः पुण्यः पुष्कराक्षो महेश्वरः ।
पूर्णः पूर्तिः पुराणज्ञः पुण्यज्ञः पुण्यवर्द्धनः ॥ ४६॥

शङ्खी चक्री गदी शार्ङ्गी लाङ्गली मुशली हली ।
किरीटी कुण्डली हारी मेखली कवची ध्वजी ॥ ४७॥

जिष्णुर्जेता महावीरः शत्रुघ्नः शत्रुतापनः ।
शान्तः शान्तिकरः शास्ता शङ्करः शंतनुस्तुतः ॥ ४८॥

सारथिः सात्त्विकः स्वामी सामवेदप्रियः समः ।
सावनः साहसी सत्त्वः सम्पूर्णांशः समृद्धिमान् ॥ ४९॥

स्वर्गदः कामदः श्रीदः कीर्तिदः कीर्तिनाशनः ।
मोक्षदः पुण्डरीकाक्षः क्षीराब्धिकृतकेतनः ॥ ५०॥

स्तुतः सुरासुरैरीश प्रेरकः पापनाशनः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्वमग्नयः ॥ ५१॥

त्वं स्वाहा त्वं स्वधा देव त्वं सुधा पुरुषोत्तम ।
नमो देवादिदेवाय विष्णवे शाश्वताय च ॥ ५२॥

अनन्तायाप्रमेयाय नमस्ते गरुडध्वज ।
मार्कण्डेय उवाच
इत्येतैर्नामभिर्दिव्यैः संस्तुतो मधुसूदनः ॥ ५३॥

उवाच प्रकटीभूत्वा देवान् सर्वानिदं वचः ।
श्रीभगवानुवाच
युष्माभिः संस्तुतो देवा नामभिः केवलैः शुभैः ॥ ५४॥

अत एव प्रसन्नोऽस्मि किमर्थं करवाणि वः ।
देवा ऊचुः
देवदेव हृषीकेश पुण्डरीकाक्ष माधव ॥ ५५॥

त्वमेव जानासि हरे किं तस्मात् परिपृच्छसि ।
श्रीभगवानुवाच
युष्मदागमनं सर्वं जानाम्यसुरसूदनाः ॥ ५६॥

हिरण्यकविनाशार्थं स्तुतोऽहं शङ्करेण तु ।
पुण्यनामशतेनैव संस्तुतोऽहं भवेन च ॥ ५७॥

एतेन यस्तु मां नित्यं त्वयोक्तेन महामते ।
तेनाहं पूजितो नित्यं भवामीह त्वया यथा ॥ ५८॥

प्रीतोऽहं गच्छ देव त्वं कैलासशिखरं शुभम् ।
त्वया स्तुतो हनिष्यामि हिरण्यकशिपुं भव ॥ ५९॥

गच्छध्वमधुना देवाः कालं कंचित् प्रतीक्षताम् ।
यदास्य तनयो धीमान् प्रह्लादो नाम वैष्णवः ॥ ६० ॥

तस्य द्रोहं यदा दैत्यः करिष्यति सुरांस्तदा ।
हनिष्यामि वरैर्गुप्तमजेयं देवदानवैः ।
इत्युक्त्वा विष्णुना देवा नत्वा विष्णुं ययुर्नृप ॥ ६१ ॥

इति श्रीनरसिंहपुराणे विष्णोर्नामस्तोत्रं नाम चत्वारिंशोऽध्यायः ॥४०॥